श्रीगणेशशारदागुरुभ्यो नमः ॥

श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेत श्रीरामचन्द्रस्वामिने नमः ॥

# ॥ बालरामायणम् ॥

---

## बालकाण्डः ।

कल्याणानां निधानं कलिमलमथनं पावनं पावनानां
पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये प्रस्थितस्य ।
विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां
बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम ॥

कोसलनाम्नि समृद्धिमति जनपदे लोकविश्रुता मनुना स्वयं निर्मिता अयोध्या नाम नगरी आसीत् । तस्यां धर्मपरो विजितेन्द्रियो वैश्रवणोपमो लोकस्य परिरक्षिता दशरथो नाम राजर्षिरवर्तत । तस्य च कौसल्या कैकेयी सुमित्रेति तिस्रो भार्याः अभवन् । महात्मनस्तस्य राजर्षेः सुतार्थं तप्यमानस्यापि सुतो नाजायत । ततः स राजा पुरोधसा वसिष्ठेन ऋश्यशृङ्गं पुरस्कृत्य पुत्रार्थं यज्ञकर्म कारयामास । तस्मिन् यज्ञकर्मणि हुतवहात् प्रादुर्भूतो दिव्यपायससम्पूर्णं पात्रं दोर्भ्यां धारयन् प्राजापत्यः पुरुषो राजानमेवमब्रवीत्—'नृपशार्दूल, प्रजाकरमिदं देवनिर्मितं पायसं गृहाण, प्रयच्छ चानुरूपाभ्यो महिषीभ्यः, तासु त्वं लप्स्यसे पुत्रान्'—इति । नृपतिः तथेति तत्प्रतिगृह्य तं पुरुषमभिवाद्य परमया मुदा समपूजयत् । परमभास्वरो दिव्यपुरुषः

---

मुमुक्षुः—Desiderative of मुच् to give up.

तत्रैवान्तर्दधे । प्रहृष्टो नरपतिरन्तःपुरं प्रविश्य कौसल्यायै पायसार्धं प्रथमं प्रददौ । द्वितीयादर्धादर्धं सुमित्रायै ददौ; ततोऽवशिष्टस्यार्धं कैकेय्यै दत्वा पुनरवशिष्टं सुमित्रायै प्रददौ । ता महीपतेरुत्तमस्त्रियः पायसं तत्प्राश्य नचिरेणैव तेजस्विनो गर्भानधारयन् । ततश्च द्वादशे मासि नवम्यां तिथौ पुनर्वसुनक्षत्रे *पञ्चसु ग्रहेषु स्वोच्चस्थानं गतेषु कौसल्या दिव्यलक्षणसंयुतं राममजनयत्, कैकेय्यां सत्यपराक्रमो भरतो जज्ञे, सुमित्रायां वीरौ लक्ष्मणशत्रुघ्नौ च जज्ञाते ॥

ते च राजपुत्राः शैशवमतीत्य साङ्गेषु वेदेषु च सर्वेषु शास्त्रेषु नैपुण्यं प्रत्यपद्यन्त । परस्परमतिमात्रमनुरक्तानां तेषां मध्ये लक्ष्मणस्य ज्येष्ठे रामे शत्रुघ्नस्य च भरते काप्यसाधारणी प्रीतिरभवत् । राजा दशरथश्चतुर्भिर्महाभागैः पुत्रैः परमप्रीतो बभूव । विवाहार्हं वयः प्राप्तानां तेषां दारक्रियां प्रति चिन्तयति दशरथे, विश्वामित्रो महामुनिरयोध्यां प्रपेदे ॥

दशरथस्तमतिथिं प्रत्युद्गम्य यथाविधि समपूजयत् । मुनिरपि प्रतिगृह्य तां पूजां, पुरे, कोशे राष्ट्रे, जनपदे, बान्धवेषु, सुहृत्सु च राज्ञः कुशलं पर्यपृच्छत् । अथ हृष्टमना राजा विश्वामित्रमुवाच—
"'भगवन्, स्वागतं ते, अपुत्रस्येव पुत्रजन्म, तवेदमागमनं मन्ये । कं वा भवतः कामं करवाणि'—इति ॥"

महातेजा विश्वामित्रः प्रत्यभाषत—'राजन्, सर्वमेतदुपपन्नं महावंशप्रसूते वसिष्ठशिष्ये च भवति । अहं यदर्थमागतोऽस्मि तदाकर्ण्यताम् । सिद्ध्यर्थं नियममातिष्ठतो मे सुबाहुमारीचौ

* 'रवि भौम शनि गुरु शुक्रेषु' इति तिलक व्याख्या ॥

राक्षसौ विघ्नकरौ वर्तेते। न च मे व्रतमध्ये क्रोधावेशो युज्यत इति शापेन तयोर्निवारणमशक्यम्*। तयोर्विनाशाय ज्येष्ठं पुत्रं रामं मे दातुमर्हसि'—इति।

दशरथो विश्वामित्रस्य भाषितं श्रुत्वा मुहूर्तं निस्संज्ञो बभूव। ततः संज्ञां प्रतिपद्यैवमभाषत—'ऊनषोडशवर्षः सुकुमाराङ्गो रामः कथं वा राक्षसैर्योत्स्यते। अहमेव धनुष्पाणिर्भवदीयां व्रतचर्यां गोप्तास्मि। यावत्प्राणान् धरिष्यामि तावन्निशाचरैर्योत्स्ये च। तत्कृपया न रामं नेतुमर्हसि' इति॥

पुत्रविश्लेषकातरस्य दशरथस्य वचनं निशम्य विश्वामित्रः कुपितो बभाषे—प्रथमं यं कमपि कामं करिष्यामीति प्रतिज्ञाय सम्प्रति प्रतिज्ञां हातुमिच्छसि। 'किमिदं साम्प्रतमिक्ष्वाकुवंशे जातस्य भवतः? यदीदं ते क्षमं तर्हि तथा कुरुष्व। अहं यथागतं गमिष्यामि। मिथ्याप्रतिज्ञस्त्वं चिराय सुखी भव'—इति॥

कुपिते कौशिके कृत्स्ना वसुधा भयेन चचाल। देवानामपि महद्भयं बभूव। इत्थंभूते व्यतिकरे भगवान् वसिष्ठो राजानमाबभाषे—"अहं वेद्मि महात्मनो रामस्यानुपमं पराक्रमम्। वृथा विशङ्कया इक्ष्वाकूणां कुले जातो धर्मात्मा च भवान्न धर्मं हातुमर्हति। विश्वामित्रेण गुप्तस्य रामभद्रस्य कुतो भेतव्यम्'—इति॥

तथा वदति वसिष्ठे नृपतिः प्रहृष्टो राममाजुहाव। कृतस्वस्त्ययनं सलक्ष्मणं तं कौशिकाय प्रदाय गमनायानुमेने। प्रतिष्ठमाने च कौशिकानुयायिनि रामभद्रे महती पुष्पवृष्टिरासीत्। कौशिको

---

* c. f. त्राणाभावे हि शापास्त्राः कुर्वन्ति तपसो व्ययम्। Kalidasa

राघवाभ्यां सहितः सरयूं तीर्त्वा दक्षिणं तीरमाससाद । ततो रामेति मधुरमामन्त्र्य 'मत्तो बलामतिबलां च विद्ये सानुजो गृहाणेति तमादिदेश । रामः प्रहृष्टो भावितात्मनो महर्षेः सकाशात्ते विद्ये सानुजो जगृहे । मध्येमार्गमविप्रहतं किमपि घोरं काननं दृष्ट्वा 'किं न्विदं दारुणं वनम्' इति रामः कौशिकं पप्रच्छ ॥

महातेजा विश्वामित्रस्तमुवाच—

वत्स ! श्रूयतामस्य दारुणस्य वनस्य वृत्तान्तः । पुरा किलात्र मलदकरूषाभिधानं स्फीतं जनपदद्वयमवर्तत । सुन्दस्य भार्या मरीचस्य रक्षसो जननी ताटका नागसहस्रबला तदिदं विनाश्य काननतां निनाय । सेयं पथिकानां प्राणहारिणी इतोऽध्यर्धयोजने वसति । तामेनां निहत्य देशमिमं निष्कण्टकं कर्तुमर्हसि'—इति ॥

महर्षेरादेशं शिरसा धारयन् दाशरथिर्देशहिताय तमर्थं प्रतिज्ञाय तीव्रं ज्याशब्दमकरोत् । तं शब्दमसहमाना शिलाजालं वर्षन्ती राक्षसी राममभ्यद्रवत् । अभिमुखमापतन्तीं तां रामः शरेणोरसि विव्याध । सा सद्यो धरणीतले पपात ममार च । ताटकावधेन तोषितस्य मुनिवरस्यादेशेन तौ तां रजनीं* तत्र सुखमूषतुः । मुनिदत्तेन मन्त्रग्रामेण समेधितप्रभावौ राघवौ मुनिमनुगच्छन्तौ आश्रमपदमत्रापताम् । महामुनेस्तास्ताः कौतुकावहाः कथाः शृण्वन्तौ तौ राजपुत्रौ न कदापि मार्गखेदमबुध्येताम् ॥

ततो नियतेन्द्रियो मुनिवरो दीक्षां प्रविवेश । राघवौ च निर्निद्रौ महत्या श्रद्धया तपोवनस्य रक्षणे जागरूकाववर्तेताम् ।

---

*Accusative of duration.

*Note* :—Words denoting duration of time are put in the Accusative case ; as, न ववर्ष वर्षाणि द्वादश दशशताक्षः ।

षष्ठेऽहनि समागते सानुचरौ सुबाहुमारीचौ यज्ञशालामुपगम्य रुधिरौघम-र्षताम् । तावदेव राजीवलोचनो राघवो मारीचोरसि शरेण प्रहृत्य तं योजनशतं यावत्समुद्रे चिक्षेप । सुबाहुमाग्नेयास्त्रेण गतासुं पातयित्वा तदनुचराणि रक्षांसि च वायव्यास्त्रेण दूरं विद्रावयामास । तेनाद्भुतेन कर्मणा सर्वेऽपि तपोवनस्था नितान्तं प्रमुदिता राघवं बहुधा प्रशशंसुः ॥

अथ यज्ञे समाप्ते प्रसन्नहृदयो विश्वामित्रो राममावभाषे— 'नरश्रेष्ठ ! मिथिलापतेर्जनकस्य परमपावनो यज्ञ इदानीं प्रवर्तते । तत्र सर्वे वयं यास्यामः । त्वमप्यस्माभिः सह मिथिलां गन्तुमर्हसि । तत्रत्यमप्रमेयप्रभावं शाम्भवं धनूरत्नं च द्रष्टुमर्हसि'—इति । मुने-राज्ञया राघवावपि प्रतिष्ठमानं मुनिमन्वगच्छताम् । मिथिलोपवनं प्राप्तो दाशरथिः कौशिकात् विदितवृत्तान्तो गौतमाश्रमं प्रविश्य गौतमशापे-नादृश्यतां गतां तत्पत्नीमहल्यां शापान्तेनानुजग्राह । अहल्यासहितेन गौतमेन विधिवत्कृतां सपर्यां च प्रतिजग्राह ॥

जनको विश्वामित्रमनुप्राप्तं श्रुत्वा पुरोहितं शतानन्दं पुरस्कुर्वन् सहसा प्रत्युद्गम्य विधिवदभ्यर्हितवान् । निर्वृत्ते मिथः कुशलप्रश्ने स राजा सकुतुकं देवतुल्यपराक्रमौ काविमौ कुमाराविति कौशिकं पप्रच्छ । मुनिरपि राघवानुगतं सर्वमपि वृत्तान्तं यथावद्वर्णयामास । निवेदयामास च तयोर्महाधनुषो दर्शनकौतुकम् ॥

जनको मुनिमेवं व्यजिज्ञपत्—'इदं किल धनूरत्नं देवरातस्य राज्ञो हस्ते न्यासीकृतम् । अस्य चारोपणाय देवा दानवा गन्धर्वा रक्षांसि वा न प्रभवन्ति । अत्र यो भुजवीर्यं प्रकाशयति तस्मै

मत्सुता सीता देयेति च प्रतिज्ञा मया कृता। बहवो राजानः सीतामत्रागत्य वरयामासुः। तथापि धनुषोऽस्य ग्रहणेऽप्यशक्ताः भग्नाशाः निववृतिरे। रामो यद्यस्य धनुष आरोपणं कुर्यात्तर्हि सीतामवश्यं तस्मै दद्याम'—इति॥

विश्वामित्रेण 'धनुर्दर्शय रामाय' इति प्रार्थितो जनको धनुरानयनाय सचिवानादिदेश। महता प्रयासेन बहुभिर्जनसमूहैः समानीतं तद्धनुःश्रेष्ठं 'वत्स, राम! धनुः पश्य' इति विश्वामित्रो रामाय दर्शयामास। रामो विनीतः कार्मुकस्यास्य ग्रहणे पूरणे च यतिष्ये इति वदन् पश्यतां नृसहस्राणां समक्षं लीलया मध्ये गृहीत्वा यावत्पूरयामास तावदेव तन्मध्ये भग्नं बभूव। निर्घातसमेन च तस्य निस्वनेन विश्वामित्रं जनकं राघवौ च वर्जयित्वा सर्वाऽपि जनता मोहं प्रपेदे। ततः प्रत्याश्वस्तेषु जनेषु जनको राजा विश्वामित्रं सप्रमोदमभाषत—'भगवन्! दृष्टवीर्याय दशरथसूनवे रामाय वीर्यशुल्कां सीतां प्रदाय सत्यप्रतिज्ञो भवितुमभिलषामि। शीघ्रमेव भवतोऽनुमत्या वार्ताहरा अयोध्यां प्रयान्तु, आनयन्तु च महात्मानं दशरथं सबान्धवं सपुरोधसं सत्वरमेव'—इति। जनकेन प्रेषिता दूता महता विहितगमना अयोध्यां संप्राप्य राज्ञे दशरथाय सन्तोषवार्तां निवेदयामासुः॥

कौशिकानुग्रहस्य फलायितं तमभ्युदयमभिनन्द्य दशरथः सचिवैः संमन्त्र्य सत्वरं सह चतुरङ्गया सेनया मिथिलां प्रतस्थे। समागतं दशरथं सपर्यया संभाव्य जनकः परमं प्रहर्षं प्रपेदे। ऊर्मिलां लक्ष्मणाय प्रदास्यामीति प्रतिजज्ञे च। अनन्तरं च दूतान् सम्प्रेष्य भ्रातरं कुशध्वजं स्वपुरमानाययत्, यस्यापि विवाहार्हं

कन्यारत्नद्वयं माण्डवीश्रुतकीर्तिनामधेयमवर्तत। ततः सर्वतः प्रवृत्ते विवाहोचिते महोत्सवे इक्ष्वाकुकुलदैवतं भगवान् वसिष्ठो वंशावलीं कीर्तयन् कन्याः चतुर्भ्यः राजकुमारेभ्यः वरयामास। मुनिसंसदि ज्वलतोऽग्नेः समक्षं समं मन्त्रोदकैरानन्दाश्रूणि सिञ्चन् महीपतिरात्मनो भ्रातुश्च ताश्चतस्रः कन्यकाः चतुर्भ्यः राजनन्दनेभ्यः सप्रमोदं प्रतिपादयामास। ते च राजनन्दना वसिष्ठानुमत्या ताः प्रतिजगृहिरे। रामः सीतां, लक्ष्मण ऊर्मिलां, भरतो माण्डवीं, शत्रुघ्नः श्रुतकीर्तिं चात्मनोऽनुरूपां वधूं प्राप्य सुतरां विरराज। विधिवन्निर्वर्तितविवाहैः कुमारैः समन्वितो राजा दशरथः सबान्धवं जनकमापृच्छ्य स्वपुरीं प्रतस्थे॥

स्वगुरोरीश्वरस्य धनू रामेण भग्नमिति जातकोपो जामदग्न्यो रामः पावक इव ज्वलन्मध्येमार्गमाजगाम। त्रिःसप्तकृत्वो मेदिनीं निःक्षत्रियां कृतवतस्तस्य दर्शनमात्रेण दशरथस्य हृदयं चकम्पे। मधुराणि सामवचनानि वदतो मुनीनगणयन् जामदग्न्यो राघवमुपगम्य 'मया समानीतेऽस्मिन् धनुषि ते विक्रमः प्रकाशताम्' इति भाषमाणो वैष्णवं धनूरत्नमर्पयामास। राघवो लीलया तद्गृहीत्वा तस्मिन्नमोघं शरं सन्दधे। चिरं स्वतपसाऽऽर्जितेषु लोकेषु शरप्रभावेण संहृतेषु भग्नदर्पो जामदग्न्यः पुनरपि तपसे महेन्द्रपर्वतं प्रययौ॥

गते जामदग्न्ये प्रमुदितो दशरथः सहानुयायिभिर्लङ्घिताध्वा सुरेन्द्रसदनमिव विराजमानं स्वमन्दिरं सम्प्राप। ते च महात्मानो राजसूनवः कृतदारकर्माणः परमया भक्त्या पितरं शुश्रूषमाणाः तस्य महतीं प्रीतिमुत्पादयामासुः। राजमहिष्यः सर्वा अपि गुणगरीयसीः

मत्सुता सीता देयेति च प्रतिज्ञा मया कृता। बहवो राजानः सीतामत्रागत्य वरयामासुः। तथापि धनुषोऽस्य ग्रहणेऽप्यशक्ताः भग्नाशाः निववृतिरे। रामो यद्यस्य धनुष आरोपणं कुर्यात्तर्हि सीतामवश्यं तस्मै दद्याम'—इति ॥

विश्वामित्रेण 'धनुर्दर्शय रामाय' इति प्रार्थितो जनको धनुरानयनाय सचिवानादिदेश। महता प्रयासेन बहुभिर्जनसमूहैः समानीतं तद्धनुःश्रेष्ठं 'वत्स, राम! धनुः पश्य' इति विश्वामित्रो रामाय दर्शयामास। रामो विनीतः कार्मुकस्यास्य ग्रहणे पूरणे च यतिष्य इति वदन् पश्यतां नृसहस्राणां समक्षं लीलया मध्ये गृहीत्वा यावत्पूरयामास तावदेव तन्मध्ये भग्नं बभूव। निर्घातसमेन च तस्य निस्वनेन विश्वामित्रं जनकं राघवौ च वर्जयित्वा सर्वाऽपि जनता मोहं प्रपेदे। ततः प्रत्याश्वस्तेषु जनेषु जनको राजा विश्वामित्रं सप्रमोदमभाषत—'भगवन्! दृष्टवीर्याय दशरथसूनवे रामाय वीर्यशुल्कां सीतां प्रदाय सत्यप्रतिज्ञो भवितुमभिलषामि। शीघ्रमेव भवतोऽनुमत्या वार्ताहरा अयोध्यां प्रयान्तु, आनयन्तु च महात्मानं दशरथं सबान्धवं सपुरोधसं सत्वरमेव'—इति। जनकेन प्रेषिता दूता महता विहितगमना अयोध्यां संप्राप्य राज्ञे दशरथाय सन्तोषवार्तां निवेदयामासुः ॥

कौशिकानुग्रहस्य फलायितं तमभ्युदयमभिनन्द्य दशरथः सचिवैः संमन्त्र्य सत्वरं सह चतुरङ्गया सेनया मिथिलां प्रतस्थे। समागतं दशरथं सपर्यया संभाव्य जनकः परमं प्रहर्षं प्रपेदे। ऊर्मिलां लक्ष्मणाय प्रदास्यामीति प्रतिजज्ञे च। अनन्तरं च दूतान् सम्प्रेष्य भ्रातरं कुशध्वजं स्वपुरमानाययत्, यस्यापि विवाहार्हे

कन्यारत्नद्वयं माण्डवीश्रुतकीर्तिनामधेयमवर्तत । ततः सर्वतः प्रवृत्ते विवाहोचिते महोत्सवे इक्ष्वाकुकुलदैवतं भगवान् वसिष्ठो वंशावलीं कीर्तयन् कन्याः चतुर्भ्यः राजकुमारेभ्यः वरयामास । मुनिसंसदि ज्वलतोऽग्नेः समक्षं समं मन्त्रोदकैरानन्दाश्रूणि सिञ्चन् महीपतिरात्मनो भ्रातुश्च ताश्चतस्रः कन्यकाः चतुर्भ्यः राजनन्दनेभ्यः सप्रमोदं प्रतिपादयामास । ते च राजनन्दना वसिष्ठानुमत्या ताः प्रतिजगृहिरे । रामः सीतां, लक्ष्मण ऊर्मिलां, भरतो माण्डवीं, शत्रुघ्नः श्रुतकीर्तिं चात्मनोऽनुरूपां वधूं प्राप्य सुतरां विरराज । विधिवन्निर्वर्तितविवाहैः कुमारैः समन्वितो राजा दशरथः सबान्धवं जनकमापृच्छय स्वपुरीं प्रतस्थे ॥

स्वगुरोरीश्वरस्य धनू रामेण भग्नमिति जातकोपो जामदग्न्यो रामः पावक इव ज्वलन्मध्येमार्गमाजगाम । त्रिःसप्तकृत्वो मेदिनीं निःक्षत्रियां कृतवतस्तस्य दर्शनमात्रेण दशरथस्य हृदयं चकम्पे । मधुराणि सामवचनानि वदतो मुनीनगणयन् जामदग्न्यो राघवमुपगम्य 'मया समानीतेऽस्मिन् धनुषि ते विक्रमः प्रकाशताम्' इति भाषमाणो वैष्णवं धनूरत्नमर्पयामास । राघवो लीलया तद्गृहीत्वा तस्मिन्नमोघं शरं सन्दधे । चिरं स्वतपसाऽऽर्जितेषु लोकेषु शरप्रभावेण संहृतेषु भग्नदर्पो जामदग्न्यः पुनरपि तपसे महेन्द्रपर्वतं प्रययौ ॥

गते जामदग्न्ये प्रमुदितो दशरथः सहानुयायिभिर्लङ्घिताध्वा सुरेन्द्रसदनमिव विराजमानं स्वमन्दिरं सम्प्राप । ते च महात्मानो राजसूनवः कृतदारकर्माणः परमया भक्त्या पितरं शुश्रूषमाणाः तस्य महतीं प्रीतिमुत्पादयामासुः । राजमहिष्यः सर्वा अपि गुणगरीयसीः

स्नुषाः प्रतिपद्य नितरां जहृषुः। रामोऽपि तया सर्वगुणसम्पन्नया सीतया समेयिवान्, श्रियेव श्रीपतिः, सुतरां विरेजे। तयोश्च तादृशं प्रेम संजज्ञे, यथा हृदयं हृदयेन व्यक्तमाचख्ये। भ्रातरश्च रामे दृढानुरक्ता मातृभिरुपलाल्यमाना आनन्दस्य परां सीमामध्यगच्छन्॥

पितृभक्ताय सततं भ्रातृभिः सह सीतया।
नन्दिताखिललोकाय रामभद्राय मङ्गळम्॥

॥ बालकाण्डः समाप्तः॥

---

## अयोध्याकाण्डः।

---

अयोध्याख्ये तु गुर्वर्थे त्यक्त्वा राज्यं गिरौ वसन्।
पादुके भरतायादात् स रामः शरणं मम॥

कृतोद्वाहं भागिनेयं भरतं स्वगृहं नेतुकामो युधाजिदयोध्यां प्रपेदे। नृपतेरनुज्ञया भरतः शत्रुघ्नेनानुगतो मातुलगृहं प्रययौ। तत्र च मातुलेन पुत्रस्नेहेन परिलाल्यमानोऽपि स सन्ततं जरठं जनकमेव मनसा स्मरन्नवर्तत। नृपतेरपि प्रोषितयोस्तयोस्तनययोरुत्सुकं हृदयमासीत्॥

अत्रान्तरे नरपतिः सचिवैः पौरैश्च संमन्त्र्य सर्वगुणानामाकरं प्रजानामनुरागभाजनमात्मनश्च प्रियतमं रामचन्द्रं यौवराज्येऽभिषेक्तुमचीकमत*। प्रजाश्च रामस्याभिषेकाय सर्वात्मना स्पृह-

---

*Aorist 3rd person singular of कम् to desire.

यामासुः । अभिषेकवार्ता कृत्स्नामयोध्यानगरीं प्रमोदसागरे प्लावयामास । गृहेषु चत्वरेषु रथ्यासु चतुष्पथेषु विपणिषु राजमार्गेषु च मण्डनविधिः समन्ततः प्रववृते । सर्वत्रापि रामाभिषेकस्य कथैव शुश्रुवे । बाला अपि संक्रीडमाना रामाभिषेकमधिकृत्यैव कथाः कथयामासुः ॥

राजा सुमन्त्रं संप्रेष्य राममानाययामास । पादयोः प्रणिपतन्तं रामं सप्रेमभरमाश्लिष्य राजा प्रजानामात्मनश्च तमभिलाषं तस्मै कथयामास । 'श्वोभावी रामभद्र, तव यौवराज्येऽभिषेक' इति सानन्दमाचक्षाणस्य महीपतेराज्ञां शिरसा धारयन् रघुवरः स्वमन्दिरं निववृते । अभिषेकोचितं च व्रतनियमं जगृहे ॥

यदृच्छया प्रासादस्योपरितलमारूढा कैकेय्या दासी वपुषीव मनस्यपि कुटिला मन्थरा तादृशमयोध्यानगरे मण्डनविधिं साक्षात्कृत्य 'किंनिमित्तोऽयमुत्सवारम्भ' इति रामस्य धात्रीं पप्रच्छ । सा तस्यै रामाभिषेकं भाविनमाचचक्षे । श्रुत्वैव रामस्य विभूतिं कोपेन दह्यमाना सा पापहृदया शयानां कैकेयीं सत्वरमुपगम्य गरकलुषां गिरमेवमुज्जगार— 'उपस्थितमनर्थमबुद्ध्वा किमेवं मुग्धा शेषे[2] । अहो महीयसी ते विपदापतिता । श्वो राजा रामं यौवराज्येऽभिषेक्ष्यति । रामेऽभिषिक्ते कौसल्या महतीमर्हणामवाप्स्यति । त्वां पुनः सर्वोऽपि लोकोऽनादरपात्रं करिष्यति । रामो राजा, भरतो दासश्च भविष्यति'—इति । रामाभिषेकस्य वार्तया

---

1 क्रीडोऽनुसंपरिभ्यश्च इत्यात्मनेपदम् ॥

2 शेषे—Present tense second person singular of शी to lie down.

प्रथमं प्रमुदितां कैकेयीं मुहुर्मुहुर्दुरुपदेशमथिशतैर्मथ्नती मन्थरा कथमपि तस्य प्रातिकूल्यं प्रापयामास । साऽपि 'राममितो वनं प्रस्थापयिष्यामि' इति दारुणां प्रतिज्ञां चक्रे ॥

तत्र चेममुपायं मन्थरा निजगाद—

'पुरा किल देवासुरसंग्रामे शक्रसाहाय्यं कर्तुं गतो दशरथोऽनुगतायास्ते शुश्रूषया सन्तुष्टो वरद्वयं ते प्रायच्छत् । तच्च यदेच्छामि तदा ग्रहीष्यामीति तस्मिन्नेव सत्यप्रतिज्ञे त्वया न्यासीकृतमास्ते । तयोरेकेन चतुर्दश वत्सरान् रामस्य वने प्रव्राजनमन्येन भरतस्याभिषेचनं च याच्यताम्' इति । तथा प्रोत्साहिता कैकेयी कोपाविष्टेव क्रोधागारं प्रविश्य धरणीतले संविवेश । दशरथस्तु प्रेयस्यै प्रियवार्तामाख्यातुमिच्छन्नन्तःपुरं प्रविष्टस्तथाभूतां तामभिलक्ष्य भृशमुद्विग्नो बभूव ॥

अथ तां सान्त्वयितुकामो राजा 'देवि केन वा हेतुनैवं विमनीभूताऽसि' इति बहुकृत्वः* पर्यपृच्छत् । केनाभियुक्ताऽसि, केन वा विमानिताऽसीति भूयो भूयः परिपृच्छन्तं तं सा क्रूरहृदयैवं जगाद— 'राजन्, नाहं केनापि विप्रकृता विमानिता वाऽस्मि । अस्ति मे कश्चिदभिप्रायः । तं यदि करिष्यमाणं प्रतिजानीषे तर्हि व्याहरिष्यामि'—इति ॥

तथेति कृतशपथं नरनाथं दत्तपूर्वं वरद्वयमुद्बोधयन्ती रामस्य प्रवासनं भरतस्याभिषेचनं च सा ययाचे । तस्याः सुदारुणं तद्वचनं निशम्यैव स महीपतिरशनिहत इव नष्टसंज्ञो बभूव । ततः कथ-

---

* कृत्वसुच् is a nominal suffix added to numerals from पञ्चन् upwards and बहु to denote the times of action.

मपि लब्धसंज्ञो राजा तया तं निष्ठुरं निश्चयमुच्चावचैरुपदेशवचनैस्त्या-जयितुं बहुधा प्रयेते । नरपतेस्तानि सामवचनानि पापहृदयायां तस्या-मूषर इवोप्तानि बीजानि विफलानि परिणेमुः। सा तु 'यदि मदीयामभ्य-र्थनामतिलङ्घ्य राममभिषेक्ष्यसि, तर्हि नियतं पश्यत एव भवत[1], विषं वा पीत्वा पावके वा पतित्वा प्राणांस्त्यक्ष्यामि' इति सशपथं कथयामास । सत्यपाशेन नियन्त्रितः वरद्वयं प्रदातुं प्रत्याख्यातुं वा अपारयन्ननुतापपरवशो राजा बहुशो विलपितैस्तां रजनीं निर्निद्रो निनाय॥

प्रभातायां शर्वर्यां ब्रह्मवर्चसनिधिर्भगवान् वसिष्ठो यथाविधि सुमुहूर्ते रामाभिषेकं निर्वर्तयितुमीहमानः सम्भारानुपगृह्य परितः स्वलङ्-कृतां राजधानीं प्रविवेश । स भगवान् राजगृहद्वारि तिष्ठन्तं कृतमतिं सुमन्त्रमवलोक्य 'मामिहागतं नृपतेराचक्ष्व' इत्यादिशत् । मन्त्री वसिष्ठाज्ञया राजसमीपं गतो राज्ञस्तात्कालिकीमवस्थामविदित्वा सुमधुरै-र्वाक्यैर्नरपतिं रामाभिषेकाय त्वरयामास ॥

दीनो राजा तस्योत्तरं दातुमक्षमस्तूष्णीमासामास । तथा स्थिते राजनि, मन्त्रज्ञा कैकेयी तं प्रत्युवाच—'सुमन्त्र, रामाभिषेकेण[2] समुत्सुको रजनीं जागरितो राजा निद्रावशमुपागतः । नाहं तं प्रबोधयितुमुत्सहे । त्वमेव त्वरितं गत्वा राममानेतुमर्हसि'— इति । 'अश्रुत्वा राजवचनं कथं गच्छामि' इति प्रतिभाषमाणं सचिवं राजा 'सत्यमेष रामं द्रष्टुमिच्छामि' इति बभाषे । सोऽपि

1. This is an instance of the Genitive Absolute अनादरे षष्ठी । (In spite of your sight).

2. प्रसितोत्सुकाभ्यां तृतीया च इति तृतीया—Panini सूत्रम् ॥

राजशासनात्त्वरितो राममन्दिरं जगाम। हर्षाकुलेन परिजनेन द्रुततरं प्रवेशितः समुदितमिव दिनमणिं सुवर्णपर्यङ्के सुखासीनं राममुपगम्य, 'सह महिष्या कैकेय्या पिता त्वां द्रष्टुमिच्छति' इति निवेदयामास च ॥

कैकेय्यामपि मातरीव दृढभक्ती रामो न किञ्चिदनिष्टमाशशङ्के। 'पितुराज्ञामनुष्ठाय शीघ्रं निवर्तिष्ये' इति प्रियतमामनुज्ञाप्य सह सुमन्त्रेण निष्क्रम्य कैकेयीसदनमाससाद। तत्र चादृष्टचरीं कामपि दीनदशामापन्नं म्लानाननं पितरं विलोक्य संभ्रान्तमनाश्चरणयोः कृत-प्रणामः कैकेयीमपि सादरं प्रणम्य नृपतेरभिमुखीभूय तस्थौ। राजा तु कण्ठे सजता गद्गदस्वरेण यत्किञ्चिद्वक्तुमुपक्रान्तोऽशक्नुवन्निव विरराम*। अदृष्टपूर्वं तातस्य तं विकारमवलोक्य रामोऽपि पदा पन्नगं स्पृष्ट्वेव पर्याकुलः कैकेयीमेवं व्याजहार—'अम्ब, कस्य हेतोः पिता मां प्रति कुपित इव लक्ष्यते। कच्चिन्मया किमप्यनिष्टं पितुराचरितम्। यद्यकृतापराधेऽपि मयि तातस्य कथमप्यप्रीतिर्मद्भाग्यपरिपाकादुपनतां तर्हि सा पुत्रवत्सलया भवत्या द्रागपनीयताम्'—इति ॥

कैकेयी स्वार्थैकप्रवणा धृष्टतामवलम्ब्य बभाषे—'न राजा कुपितः, नाप्यस्य किंचिद्दुःखमापतितम्; किंतु स्वकृतां प्रतिज्ञां रक्षितुमक्षमः त्वद्भयादात्मनो मनोगतं वक्तुमसमर्थः क्लिश्यते। यदि तत्सर्वथा करिष्यसि तर्ह्यहं ते तत् कथयिष्यामि'—इति। 'तातस्य वचनात्पावके पतितुमपि सज्जो ह्यहम्। तत्किमेवं मय्यनर्हं

---

*व्याङ्परिभ्यो रमः इति परस्मैपदम् (Panini)। रम् preceded by वि, आ or परि takes Parasmaipada terminations.

ब्रवीषि ? तातस्य यत् समीहितं तत्करिष्यामीति प्रतिजाने । अम्ब रामो द्विर्नाभिभाषते ' इत्यार्जवेन ब्रुवाणं तं क्रकचहृदया कैकेयी भृशदारुणमात्मनोऽभिलषितं निर्घृणमवादीत् । ' चतुर्दश हायनानि वने चीरजटाधरो वस '—इति वदन्तीमपि तां निर्विकारेण गम्भीरभावेन, ' अम्ब, नाहमर्थपरो मानुषं लोकमधिवस्तुमभिलषामि, केवलं धर्ममेव पुरुषार्थं मन्यमानं मां मुनिभिः सदृशमवेहि ' इति रघुपुङ्गवः प्रत्यभाषत । ' अद्यैव शीघ्रजवैर्हयैर्दूताः भरतमभिषेकार्थं मातुलालयादानयन्तु ' इति च तां संप्रार्थ्य संज्ञाविहीनं नरपतिं पुनरपि प्रणिपत्य जननीमाप्रष्टुमनाः वनवासाय कृतनिश्चयेन कोपारुणनयनेन लक्ष्मणेनानुगम्यमानः कौसल्या-मन्दिरं प्रविवेश । तावदेव कर्णाकर्णिकया वनवासवार्ता सर्वतः प्रससार । कैकेयीगृहं प्रविशतस्ततो निर्गच्छतश्च तस्य मुखरागं समं दृष्ट्वा जनता विसिष्मिये ॥

अभिषेकोत्सवं प्रतीक्षमाणा राममाता वनवासवार्तया वात्यया लतेव कम्पिता महीतले पपात । धैर्यसागरेण रामेण समाश्वासिता सा रामविश्लेषतप्तस्य प्राणवल्लभस्य क्षते क्षारं मा क्षिपाणीति शोकवेगं नियम्य पत्युः शुश्रूषया स्वं जीवितं सफलममन्यत । ' पितृवाक्यपरि-पालनाय काननं प्रतिष्ठमानं मामनुमन्यस्व ' इति सप्रणामं प्रार्थयमानस्य तनयस्य स्वस्त्ययनकाङ्क्षिणी कौसल्या कथमप्यपनीतशोका निरुद्ध-बाष्पवेगा मङ्गलानि चकार । 'यमेव सर्वोपरि मन्यमानो नियमेन पालयसि स धर्मस्त्वामभिरक्षतु, सर्वे च देवाः सर्वाणि च भूतानि स्वस्ति ते विदधतु ' इति मुहुर्मुहुराशीर्वचनशतानि वर्षन्ती, भवितव्यताबलं तथाविधं विचिन्त्य स्वयमाश्वसती, 'चतुर्दश समाः क्षणमिव नीत्वा पुनरयोध्यामागतं

सर्वसिद्धार्थमरोगं त्वां वत्स पश्यानि' इति व्याहरन्ती सा तमात्मजं विससर्ज ॥

मातरमनुज्ञाप्य स्वगृहमागतः स किञ्चिदवनतमुखः सीतासमीपमवाप। शोकाविष्टमिव प्राणनाथमुपलक्ष्य वेपमानया किमेवं हर्षोचितेऽपि समये परिम्लानोऽसीति तया पृच्छ्यमानः शोकभारमात्मना धारयितुं न प्रबभूव। स सीतामभिदधे—'प्रिये जानकि तत्रभवांस्तातः सत्यरक्षणाय मां वनं प्रव्राजयति, भरतं ममानुजं यौवराज्ये चाभिषेक्ष्यति। चतुर्दश वत्सरान् मधुमूलफलैर्मुनिवृत्तिना मया वने वर्तितव्यम्। सोऽहं वनं प्रस्थितस्त्वां द्रष्टुमागत इदानीमस्मि। मयि वनं याते त्वं राज्ञो भरतस्यानुवर्तिनी धर्मपरायणा वृद्धयोः मम पित्रोः सेवानिरता वर्तितुमर्हसि'—इति ॥

तादृशस्य प्रणयगरिम्णोऽननुगुणमप्रतीक्षितं च रामवाक्यमाकर्ण्य विषण्णहृदया जनकनन्दिनी किञ्चिदिव पारुष्यमवलम्बमाना तं गर्हयितुमुपचक्रमे—'किमिदमननुरूपं मां भाषसे? अनन्यशरणां त्वत्प्राणामिमां परित्यक्तुं किंनु धृष्णोषि। यदि त्वं वनं प्रस्थितोऽसि तर्हि साऽहमग्रतः कुशकण्टकान् मृद्नती गमिष्यामि। यदि चानन्यभावां मामिहोपेक्षसे तर्हि मरणं मे शरणं भविष्यति। यत्र रामो निवसति तद्वनमपि सीताया नन्दनमेव'—इति।) इत्थं सुदृढं भुवाणां सहधर्मचारिणीं वनवासक्लेशानां बहुकृत्वो वर्णनेनापि यदा निवर्तयितुं न शशाक तदा रामः 'त्वदृते* स्वर्गोऽपि न मह्यं रोचत' इति वदन्ननुगमनायानुमेने ॥

---

शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् इति विहितः तुमुन् प्रत्ययः—-Panini.

*ऋते (without) governs the Ablative case (पञ्चमी)।

तयोस्तं संवादमाकर्ण्य स्वमनोरथस्य विघातमाशङ्कमानो बाष्प-पर्याकुलमुख: शोकं नियन्तुमशक्नुवंश्च सुमित्रानन्दनो भ्रातुश्चरणौ गाढं निपीडयन् 'आ* शैशवादनुचरमाज्ञाकरं मामिदानीं न विहातुमर्हसि' इति भूयो भूय: प्रार्थयत। 'यद्यार्यो वनाय प्रतिष्ठते तदाऽहं धनुर्धर: पुरो गमिष्यामि सौविदल्ल इव' इति वदन्तं लक्ष्मणमाश्रितवत्सलो रामचन्द्र: कथं नाम विजह्यात्? रामेणानुज्ञात: सौमित्रिर्जननीमापृच्छ्य, 'रामं दशरथं विद्धि मां विद्धि जनकात्मजाम्' इति तस्या निदेशमाम्नायमिव मानयन् राममेवोपतस्थे॥

ब्राह्मणेभ्यो बहुधनमाभरणानि च वितीर्य वसिष्ठस्य भगवत: सत्यां आशिषं उपसंगृह्य च ते त्रयो राजानमनुमानयितुमुपागमन्। शोकार्णवमग्नं महीपतिं प्रदक्षिणीकृत्य प्रणिपत्य च दृढसङ्कल्पास्ते तस्यानुमतिमयाचन्त। ततो राम: कैकेय्या स्वयमर्पितं वल्कलं परिधाय पर्यश्रुनयनै: पौरसङ्घातै: सशोकविस्मयमवलोक्यमान: ससीतालक्ष्मण: सुमन्त्रेण सज्जीकृतं स्यन्दनमारुरोह॥

तेषु रथारूढेषु सुमन्त्र: पवनजवनान् वाजिनश्चोदयामास। सबालवृद्धा कृत्स्नाऽप्ययोध्या परदु:खार्ताताननुसर्तुकामा बभूव। रामोऽपि मधुरैर्वचनै: पौरानाश्वासयन् द्रुतचोदितैरश्वैश्चक्षुर्विषयमतीयाय। यावत्तु रथनेमिसमुद्धूता रजोराजिरदृश्यत तावद्दशरथस्तत्प्रयातायां दिश्येव दत्तचक्षुरवर्तत॥

रामोऽपि तमसातीरे तां रजनीमतिवाह्य प्रातर्गोमतीं सरयूं च समुत्तीर्य धनधान्यसम्पन्नं रम्योद्यानविराजितं च कोसलदेश-

---

* आ governs the Ablative case. cf. आ उदकात् प्रियं पान्थमनुव्रजेत्॥

2

मतिक्रम्य मुनिगणनिषेविताया लोकपावन्याः गङ्गायाः कूले गुणशालिना-मग्रतःसरेण गुहेन निषादाधिपतिना सङ्गग्मे । भक्तिनम्रो निषादराजो रघुपुङ्गवं स्वविषयमागतं यथावदुपचचार । अपरेद्युरुषस्युत्थाय गुहसमानीतेन न्यग्रोधक्षीरेण जटाः कृत्वा जाह्नवीं तरीतुकामो रामः 'सुदृढा नौरानीयताम्' इति निषादराजं प्रार्थयामास । गङ्गाकूले सुमन्त्रं निवर्तयिष्यन् 'मन्त्रिवर्य, तातस्य सकाशे सततमप्रमत्तो भव'—इति सानुनयं भाषित्वा सह सीतालक्ष्मणाभ्यां गुहानुमतो नावमारुरोह ॥

भागीरथ्या दक्षिणं तीरमासाद्य ते त्रयोऽपि पद्भ्यां सञ्चरमाणा भरद्वाजस्य महामुनेराश्रमं प्रपेदिरे । भरद्वाजस्तं प्रियमतिथिं रामचन्द्रं यथाविधि सच्चकार । अननुभूतपूर्वेण मार्गखेदेन किञ्चिदिव परिश्रान्तास्ते तां रात्रिं भरद्वाजाश्रमपदे सुखमूषुः । प्रभातायां रजन्यां 'मधुमूलफलाढ्यश्चित्रकूटाचल एव भवतु भवतां हृद्यो निवास' इति भरद्वाजगिरा तदाश्रमात्प्रस्थाय ते चित्रकूटमनुप्राप्य माल्यवतीकूले रम्यमाश्रमं निर्माय परमया निर्वृत्या तं गिरिवरमध्यवात्सुः* । विप्रवासदुःखं च व्यस्मार्षुः ॥

रामशून्येन रथेन हर्षशून्येन च हृदयेन निरानन्दां रिक्तामयोध्यां प्रतिनिवृत्तः सुमन्त्रः शोकाकुलो बाष्पाविललोचनः कथमपि नृपतेः सकाशं सम्प्राप्य प्रोषितानां तेषां प्रवृत्तीर्निवेदयामास ।

---

1) गम् with सम् is आत्मनेपदी in the intransitive use.

2) चर् with सम्, used only with a noun in the Instrumental case is आत्मनेपदी ॥

* वस् with उप, अनु, अधि or आ governs the Accusative case of the place of action. उपान्वध्याङ्वसः - Panini.

राजा तु रामं जटाधरं निशम्य द्विगुणीभूतशोको मूर्छितो बभूव। अनुक्षणं 'हा राघव! हा वत्स! हा पितृप्रिय! हा ममायासनाशन। क्व गतोऽसि' इति पुनः पुनः परिदेवमानः प्रवासात्प्रभृति पञ्चदिनानि दुःखमयं जीवितं धारयामास। कुमारभाव एव शब्दवेधीति प्रथां गतेन दृप्तेनात्मना कृतस्य मुनिकुमारवधस्य विपाकं तमनुस्मरन्नाचक्षाणश्च परिचर्यारतायै प्रियतमायै कौसल्यायै दशरथः षष्ठे दिवसे निशीथात्परं दिवमारुरोह। अयोध्यायां सा रात्रिः कियतीं व्याकुलतामुदपादयदिति केन वा वर्णयितुं शक्यते।

रामलक्ष्मणौ चित्रकूटे निवसतः। भरतः शत्रुघ्नेन सह मातुः पापकर्मणामनभिज्ञो मातुलगृहे सुखेन रमते। राजा कालधर्मं गतः। राज्यमराजकं जातम्। अनाथाः प्रजाः कं शरणं गच्छन्तु?

'अराजकं राष्ट्रं मा विनाशमवापत्' इति चिन्ताकुला राजकर्तारो महात्मानो मुनयः समेत्य 'त्वमेव कुमारं भरतमन्यं वा राजानमभिषेक्तुमर्हसि' इति पुरोहितं वसिष्ठं प्रार्थयामासुः। पित्रा प्रतिज्ञातराज्यं भरतं सद्यः समानेतुमिच्छन् वसिष्ठः सचिवैः संमन्त्र्य भरताय दूतान् प्रजिघाय। वसिष्ठेन प्रहिता दूताः सप्तभिरहोभिस्त्वरिततरं केकयान् प्राप्य भरतं विज्ञापयामासुः—'राजनन्दन! सामात्यः पुरोहितः सहसा त्वां द्रष्टुमीहते। आत्ययिकं ते किमपि कृत्यमापतितम्। अतस्त्वरमाणेन प्रस्थीयतामद्यैव भवता'—इति॥

पूर्वेद्युरनुभूताभिर्दुःस्वप्नपरम्पराभिराकुलचित्तो भरतस्तेन सन्देशेन संक्षुभिततरो भूत्वा पितुर्मातॄणां रामलक्ष्मणयोश्च पृथक् पृथक् कुशलं पर्यपृच्छत्। 'रामं प्रोषितम्, राजानं वा स्वर्गतम्,

भरताय मा शंसिषुर्भवन्तः' इति पुरोधसा प्रस्थानसमये प्रतिषिद्धाः दूता मृषैव 'सर्वेषां कुशलम्' इत्येकमेवोत्तरं ददुः ॥

भरतो दूतागमनमावेदयन् मातामहं मातुलं चामन्त्र्य प्रस्थानाय तत्वरे। ताभ्यां दत्तानि महार्घाणि पारितोषिकाणि ग्रहीतुमपि ग्लायन्ननुजेन सह सद्यः स्यन्दनमारुह्य प्रतस्थे च ॥

सप्तभिरहोभिरतिलङ्घिताध्वा प्राप्तायोध्यस्तां पुरीमयथापूर्ववृत्तामवलोक्य सन्तप्यमानः स सारथिमाबभाषे—'सूत, सततमयोध्यायां श्रूयमाणस्तुमुलः शब्दो विरतप्रायो वर्तते। उद्यानानि संस्कारशून्यानि हतप्रभाणि पश्यामि। चन्दनागरुवासितः पवनो नात्र प्रागिव प्रवाति। विपणयोऽपि विना वणिग्जनैः शून्यागाराणीव दृश्यन्ते। अशेषा च जनता दीना म्लानानना कृशा मलिना बाष्पाविललोचना नितरामुत्कण्ठितेव विलोक्यते' इत्यादि पुनः पुनरालपन् ससंभ्रमं स्यन्दनादवतीर्य पितुरालयं प्रविवेश। तत्र पितरमदृष्ट्वा मातुर्गृहं प्रविश्य तस्याश्चरणयोः कृतप्रणामः 'कुत्र मे तातः' इति तां पप्रच्छ ॥

'या गतिः सर्वभूतानां तां गतिं ते पिता गत' इति वज्रनिर्घातनिष्ठुरं तदुत्तरं श्रुत्वा भरतो निकृत्तमूल इव बालपादपो महीतले लुप्तसंज्ञो पपात। अथ शनैः शनैर्लब्धसंज्ञम्, तात तातेति विलपन्तम्, 'अम्ब, कीदृशश्चरमः सन्देशो मन्दभाग्याय मे तातेन विहित' इति पृच्छन्तं तं 'हा राम! हा सीते! हा लक्ष्मण!' इति परिदेवमानः पिता ते प्राणानमुञ्चत्' इति द्वितीयेनाप्रियविषेण मूर्छयन्ती कैकेयी स्वनृशंसताया असीमतां प्रकटयामास। स्त्रीस्वभावसुलभेन चापलेनात्मनो दुश्चरितानामियत्तामजानती सा

सुनिर्लज्जमात्मचरितं विस्तरेणाख्याय पण्डितमानिनी तनयहृदयस्याप्यनभिज्ञा तं राज्याभिषेकाय प्रेरयामास ॥

'धर्मात्मना पित्रा, पितृसमेन ज्येष्ठेन च भ्रात्रा विहीनं शापहतं मां धिक्, अपवादजनन्या अपत्रपाया जनन्या उदरादवाप्तजनिं मन्दभाग्यं मां धिक्' इत्यात्मानं शतशो गर्हयन् भरत एकपुत्रायाः कौसल्यायास्तादृशीं शोकसन्ततिमाहितवतीं स्वमातरं च बहुधा निनिन्द । सर्वथाऽपि तन्मनोरथस्यापरिपूरणेन तस्याः दण्डने कृतनिश्चयः शोकं नियम्य तैलद्रोण्यां निक्षिप्तं तातशरीरं वसिष्ठवचसा वह्निसात् कृत्वा प्रेतकर्माणि यथाविधि निर्वर्तयामास ॥

कृतोदकं गताशौचं च तं सचिवा उपगम्य राज्याभिषेकाय प्रार्थयांचक्रिरे । भ्रातृवत्सलो भरतस्तेषामभिषेकोद्यमं निवार्य रामदर्शनलालसः काननं प्रति प्रतस्थे । 'यावदार्यो न निवर्तते तावदरण्ये तस्य दासभावेन वर्तिष्ये, न पुना रामवर्जितां राजलक्ष्मीमादरिष्ये' इति भाषमाणस्य तस्य गुणैकप्रवणतां प्रशंसन्तः सर्वे पौरा रामदर्शनकाङ्क्षिणस्तमनुप्रातिष्ठन्त । तादृशं तस्य रामानुरागमुपलक्ष्य कैकेय्या अपि हृदयमनुशयवशंवदमजायत । सचिवैः पुरोहितेन भ्रात्रा जननीभिश्च समन्वितो भरतः सह चतुरङ्गया सेनया भागीरथीमनु[1] शृङ्गबेरपुरस्याभ्यर्णमाससाद । सेनया सह प्रस्थितं तं विलोक्य 'किं धर्मात्मा भरतोऽपि राज्यलोभेन गुणनिधये रामाय द्रोग्धुं[2] प्रक्रान्तः' इति गुहः प्रथममाशशङ्के ।

---

[1] अनु governs a noun in the Accusative.

[2] द्रुह् governs a noun in the Dative case.

क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः—Panini

तेन सुहृत्तरस्तदीयं रामानुनयव्यवसायमवगम्य मुदितात्तस्मै 'वनं गच्छता मध्येमार्गमत्रागतेन रामेणास्मिन्निङ्गुदीपादपमूले उषितम्, अस्यां तृणमय्यां शय्यायां शयितम्, अत्र स्थितेन जटाः कल्पिताः' इति तस्य निवासादिस्थानानि दर्शयन्निषादराज आत्मना साक्षात्कृतं सर्वं राम-वृत्तान्तमवर्णयत्। गुहोक्तिभिर्नवीकृतशोको भरतः सर्सा तस्य रामस्य तादृशीं दशां स्वनिमित्तामाकलय्य मुहुर्मुहुरनुशोचन् 'अद्यप्रभृति फलमूलाशनो जटावल्कलधारी भूमिशयश्च भविष्यामि' इति प्रतिजज्ञे। निषादराजेन गङ्गां तारितः सानुचरस्तदुपदिष्टेन वर्त्मना भरद्वाजाश्रमं जगाम च॥

अनुचारान् दूरे स्थापयित्वा वसिष्ठं पुरस्कृत्य प्रविष्टाश्रमो राजसूनुर्भरद्वाजेन सत्कृतः प्रस्थानहेतुमपृच्छ्यत। 'अपि नाम कौसल्यानन्दने पापमाचरितुमुद्यतोऽसि' इति भरद्वाजेन पृच्छ्य-मानः स पर्यश्रुलोचनः सज्जमानवचाः 'हा हतोऽस्मि! हन्त! भगवानपि मामेवं मन्यते' इत्युत्तरयन् रामानुगतां वार्तामन्वयुङ्क्त॥

भगवतो भरद्वाजस्य गिरा रामं चित्रकूटे सुखोषितमवगम्य दिवसमेकं तदाश्रमे यापयित्वाऽपरेद्युः प्रत्यूष एव स ततः प्रस्थाय परिश्रान्तपरिवारो रम्यं रामाश्रमपरिसरमुपससार। भरतस्य सेनया सहागमनमन्यथा गृहीत्वा क्रोधवश्यतां गतमनुज 'भरते वृथा विशङ्कां मा[1] कृथाः[2]' इति रामः सान्त्वयामास॥

---

[1] मा (Indeclinable) is a particle of prohibition usually used with Imperative and Aorist. When used with Aorist the augment 'अ' is dropped.

[2] Aorist 2nd person singular of कृ to do (आत्मनेपदी)

सैनिकान् यथार्हं विनिवेश्य 'भवता जननीजनान्वितेन पृष्ठतो ममागम्यताम्' इति वसिष्ठमाभाष्य शत्रुघ्नेन सुमन्त्रेण चानुयातो भरतो ज्यायसो भ्रातुर्दर्शनायोत्कण्ठितः पुरो ययौ। 'कृतापराधः कथमुपसर्पेयम्' इति मन्दीबभूव। चिराय दृष्टमार्यमवलोक्य 'शोकतरङ्गिणीं तरेयम्' इति तत्वरे। एवमनियतेन पदविन्यासेन हर्षशोकमयानामन्तराले दोलायमानो बाष्पावरुद्धदृष्टी रामस्य पुरतो दण्डवत् प्रणनाम। 'आर्य' इत्यामन्त्र्य परतो वक्तुमपारयन् विरराम च। शत्रुघ्नश्च रुदन् रामस्य चरणौ ववन्दे। रामोऽपि तावुभौ सुदृढं परिष्वज्य बाष्पं विससर्ज॥

जटिलं चीरवसनं विवर्णवदनं कृशमभिज्ञातुमशक्यं भ्रातरं भरतं रामोऽङ्कमारोप्य सप्रेमादरं बभाषे—'वत्स, चिराय दिष्ट्या त्वां पश्यामि। कच्चित्तातः कुशली वर्तते? न हि जीवतस्तस्य त्वं वनमागन्तुमर्हसि। कच्चित्ते प्राप्तराज्यस्य सर्वतः प्रतिष्ठा जाता? अपि कुशली भगवान् वसिष्ठः? अपि कुशलं मातॄणाम्?—इति। एवं क्रमशः सर्वेषां कुशलमन्वयुङ्क्त॥

भरतस्तु नितान्तं दीनात्मा 'ससीतालक्ष्मणे भवति निष्क्रान्ते शोकाभिभूतस्तातो दिवं यात, इति बाष्पगद्गदया गिरा तं जगाद। पितुः पञ्चताप्राप्तिं निशम्य सत्त्वसागरोऽपि रामो गतचेतनः पपात। ततः सुमन्त्रेण भ्रातृभिश्च समाश्वासितस्तातस्य तांस्तान् गुणाननुस्मृत्य पुनः पुनर्विलपन्मन्दाकिनीमवगाह्य विधिना निवापाञ्जलिं दत्वा बदरीमिश्रेणेङ्गुदपिण्याकेन* पिण्डानर्पयामास। तेषां भ्रातॄणां विलापमाकर्ण्य सङ्गताः पौरजनाः शोकेनाभिभूताः अभूवन्; तादृशं भ्रातृस्नेहमुपलक्ष्य विस्मयमभजन्त च॥

---

*यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः;—Ramayana.

तावदेव राजपत्न्यो वसिष्ठेनानीता रामसविधमुपजग्मुः । रामो वसिष्ठस्य जननीनां च पादौ जगृहे । अवर्णनीयेन चेतोविकारेणाक्षिप्यमाणाः सर्वे ते काममप्यननुभूतपूर्वामवस्थामनुबभूवुः ॥

अथापरेद्युः पौरेषु पुरोधसि सचिवेषु च यथार्हमुपविष्टेषु विनयावनतो भरतो रामं विज्ञापयामास—'आर्य, यदहं विवक्षामि तद्वक्तुं न मे प्रगल्भताऽस्ति । किंतु सहजप्रणयगरिम्णा किमपि वक्तुं धृष्णोमि । ताते यशश्शेषतां गते अशेषा वसुमती त्वामेव वोढारमिच्छति । नह्यग्रजे ध्रियमाणे रघूणां राजलक्ष्मीः कनीयांसं प्राप्तुमर्हति । चपलाया मज्जनन्या निर्बन्धेन कृत्यमूढतां नीतस्तातो राज्यं मह्यं प्रत्यजानीत । तथापि मम कथमुदेतु मतिविप्लवः ? लोकप्रदीपे भूपे कालेन कवलिते सर्वाः प्रजाः सूर्यस्येव तवोदयं प्रतीक्षन्ते । यदि वा राज्यमार्येण त्यक्तं तदाऽपि दासेन मया पुनः समर्पितमार्यः स्वीकर्तुमर्हति । तत्प्रसीदत्वार्यः । अनाथं राष्ट्रमार्येणैव सनाथीकरणीयम्'—इति ॥

रामस्तमाश्वासयन्नुवाच—'वत्स ! सर्वे भावा अभावावसानाः । राज्यं विभूतयः प्रीतयः प्रियसङ्गमाश्चावश्यं क्षयमेष्यन्ति । स्वीयैः सुचरितैः स्वर्गं गतो धर्मात्मा जनकः सर्वथा नानुशोचनीयः । यथा तातेन सोढ्वाऽपि शोकपरम्परां धर्मोऽनुपालितस्तथा तन्नियुक्तेन त्वया मया च तस्य शासने वर्तितव्यम् । अतो निस्संशयं सह शत्रुघ्नेन याह्ययोध्याम्, प्रकृतीश्चोपरञ्जय, मातरं मा च गर्हय'—इति ॥

बहुशः प्रवर्तिताभिरपि प्रार्थनाभिर्भरतो रामं वनवासप्रतिज्ञायाः किञ्चिदपि च्यावयितुं न शशाक । 'लक्ष्मीरपि चन्द्रादपेयात्,

हिमवान् वा हिमं त्यजेत्, सागरो वेलामप्यतीयात्, न पुनरहं पितुः सन्निधौ कृतां प्रतिज्ञां त्यजेयम्' इति रामो दृढमाचख्यौ । तदा वसिष्ठः प्रजानां योगक्षेमकाङ्क्षया कमप्युपायं निर्ममौ । 'भरत, भ्रातुः पादुके गृहीत्वा तदनुमतो राज्यं पालय' इति स भरतमुपदिदेश । रामं च 'पादुके भरताय प्रयच्छ' इति प्रार्थयामास ॥

सत्यसन्धेन राघवेण वितीर्णे पादुके शिरसा गृहीत्वा 'नगराद्बहिः* कृतवसतिरनयोरर्पितराज्यतन्त्रः चतुर्दश वत्सरान् मुनिवृत्तिरार्यागमनं प्रतीक्षिष्ये, अतीते चतुर्दशे वत्सरे यद्यार्यं न द्रक्ष्यामि तर्हि हुतवहं प्रवेक्ष्यामि' इति सर्वेषां समक्षं प्रतिज्ञां च कृत्वा सर्वैरनुगतैः सह भरतः साकेतं प्रतिनिववृते । तातेन रामेण च विरहितं साकेतं स्वयं प्रवेष्टुमनिच्छन् मुनीनां संमतं नन्दिग्रामं सानुजः प्रपद्य सिंहासनोपरि रामपादुके विन्यस्य पूजयन् जटावल्कलधरो राज्यं परिपालयन्नवर्तत ॥

रामोऽपि भरतस्य जननीनां पौराणां च परिचिते बहुशो भुक्तविभवे चित्रकूटे निवासं नातिहृद्यमाकलयन् सह सीतालक्ष्मणाभ्यां वनान्तरं प्रवेष्टुमाचकाङ्क्ष । ततश्चित्रकूटात् प्रस्थाय महर्षेरत्रेराश्रमं प्राप्य तेन सभाजितस्तां शर्वरीं तत्रातिवाह्य तद्दर्शितेनाध्वना दण्डकारण्यं प्रविवेश ॥

त्यक्तसाकेतवासाय चित्रकूटविहारिणे ।
सेव्याय सर्वयमिनां धीरोदाराय मङ्गळम् ॥

---

अयोध्याकाण्डः समाप्तः ॥

* बहिः governs a noun in the Ablative case (पञ्चमी)

विराधादिकबन्धान्तान् हत्वा स्वपदमादिशत् ।
विचरन् दण्डकारण्ये भवारण्ये स मे गतिः ॥

तिग्मांशुरिव मेघमण्डलं दण्डकारण्यं प्रविष्टो दुर्धर्षो राघवः सर्वभूतानां शरण्यम्, ब्राह्मया लक्ष्म्या दीप्यमानम्, तापसानामाश्रममण्डलं ददर्श । तद्दृष्ट्वा विनयावनतो धनुर्विज्यं विधाय* ससीतालक्ष्मणोऽभिजगाम । मुनयस्तं विश्रुतविक्रमं रामं विज्ञाय निर्निमेषैरक्षिभिरापिबन्तः सविस्मयं प्रतिगृह्य पर्णशालां प्रवेश्य समपूजयन् । 'त्वद्वीर्यगुप्तानामस्माकं निर्विघ्नानि वर्धन्ते तपांसि' इति तमभिनन्द्य 'न्यस्तदण्डानां जितक्रोधानां च तपस्विनामस्माकं रक्षणे जागरूको भवान् भवितुमर्हति' इति च प्रार्थयामासुः । स्वीकृतातिथ्यो राघवः क्षपामेकां तत्र क्षपयित्वा प्रातः सुमहद्वनान्तरं जगाहे ॥

तत्र गिरिशृङ्गाभं कज्जलश्यामं वैयाघ्रचर्मवसनं सर्वभूतभयङ्करं विराधाभिधानं रक्षस्तेषां पुरः प्रादुर्बभूव । दृष्टमात्रे रक्षसि चकिता सीता वृकत्रस्तेव हरिणी लोलैर्विलोकनै राममालुलोके । भैरवेण नादेन दिशः पूरयन् स निशाचरः क्रुद्धस्तानभिगम्य 'जटिलौ धन्विनौ विरुद्धाचारौ कौ युवाम्' इति जल्पन् जानकीं प्रसह्य जगृहे । तेन पापेनाकृष्यमाणा जनकनन्दिनी प्रवाते कदलीव विवेपे ॥

तदसह्यतमं रक्षसः परिभवं प्राप्य खिन्नो राघवः किं न पश्यसि सौमित्रे सीतां परेण स्पृश्यमानाम्' इति भ्रातरं रक्षोवधाय

---

* एतच्च प्रशान्ताश्रमदानुगुण विचेष्टितं वेदितव्यम् ॥

प्रेरयामास । लक्ष्मणेन निशितैः शरैः प्रहृतो विराधः शूलं लक्ष्मणोरसि चिक्षेप । तावद्रामः शरनिकरं वर्षन् शूलं द्विधाकृत्य राक्षसं हतासुमपातयत् । स चात्मनः शापवृत्तां तं रामाय कथयित्वा गर्तक्षेपेण शरीरसंस्कारं च याचित्वा शरभङ्गाश्रमस्य मार्गमुपदिशन् दिवं जगाम ॥

विराधवधेन सीतां समाश्वास्य रामः शरभङ्गाश्रममभिययौ । शरभङ्गः स्वतपसाऽऽर्जितं ब्रह्मलोकं प्रयास्यन् रामागमनं प्रतीक्षमाणोऽवर्तत । स महात्मा रामायात्मवृत्तान्तमाख्याय 'इहारण्ये सुतीक्ष्णो नाम धार्मिको वसति, तं याहि, स ते श्रेयो विधास्यति' इत्युक्त्वा भौतिकं पिण्डं सर्प इव निर्मोकमुत्ससर्ज । वासवेन नीयमानो ब्रह्मलोकं च प्रपेदे ॥

शरभङ्गे द्यां गते तद्वननिवासिनो मुनयः सत्यपराक्रम राममुपगम्य दत्ताशिषः स्वीयां दुर्दशामवादिषुः । 'काननेऽस्मिन् मुनिसंक्षयदीक्षितै राक्षसैरल्पावशेषितान् तपःक्षयभयेन शापदानाद्विरतानस्मांस्त्रातुमर्हसि' इति व्याहरतस्तपोधनान् प्रति स्वयमेव 'दुष्टदण्डने धृतव्रतस्य ममायं भवतां शासनानुग्रहोऽधिक' इत्याश्रुतराक्षसवधो रामस्तदनुमत्या तीक्ष्णतपसः सुतीक्ष्णस्याश्रममयासीत् । सुतीक्ष्णाश्रमे सुखोषितस्तदनुज्ञया दण्डकारण्यवासिनां महात्मनां तांस्तानाश्रमतल्लजान् सेवमानो दश हायनानि अनैषीत् ॥

पुनः सुतीक्ष्णाश्रमं निवृत्य श्रीराघवः तं कुतूहलेनाब्रवीत्—'अस्मिन्नरण्ये मुनिसत्तमो भगवानगस्त्यो निवसतीति बहुशः श्रुतवानस्मि । तस्य महात्मनो रम्यमाश्रमपदं गत्वा तच्चरणे वन्दितुमभिलषामि । कृपया मे भगवान् तदाश्रमपथमुपदेष्टुमर्हति'

इति । ततः सुतीक्ष्णोपदिष्टेन तथा पीतसागरस्य विन्ध्यदर्पदमनस्य वातापितापनस्य मुनेः परममपावनमाश्रमं शिश्रिये ॥

धर्मात्मानं रामं स्वाश्रमं प्रत्यागतं दृष्ट्वा चुलुकितसागरोऽपि स मुनिः प्रमोदसागरे ममज्ज । रामः सह सीतया लक्ष्मणेन च सूर्यवर्चसो महर्षेः पादौ जग्राह । कृताञ्जलिं रघुवरं कुशलं पृष्ट्वा पुष्पफल-मूलादिभिः सत्कृत्य महर्षिरानन्दभरितः प्रोवाच—'पुरुषव्याघ्र, विश्वकर्मणा निर्मितं हेमराजिभूषितं वैष्णवमिदं दिव्यं धनुः, अयं च ब्रह्मदत्तः सूर्यसङ्काशः शरोत्तमः, इमौ च माहेन्द्रौ निशितबाणपूर्णौ निषङ्गौ, अयं च हैमकोशो दिव्यखड्गः, सर्वमेतत् विजयाय मत्तो गृहाण' इति । एवमुक्त्वा सर्वाणि तानि दिव्यायुधानि राघवाय विततार ॥

गृहीतास्त्रं रामचन्द्रमगस्त्यः पुनरपि बभाषे—'राम, सुकुमारी राजगृहोचिता जनकनन्दिनी भर्तृस्नेहप्रचोदिता त्वामनुसरन्ती प्राज्यदोषं वनं प्राप्ता । सैषा यथा न खिद्येत तथा त्वं कर्तुमर्हसि । प्रायेण स्त्रीणामियं प्रकृतिः, यत्समस्थमनुरज्यन्ते पतिं, विषमस्थं त्यजन्ति च । विद्युतां लोलत्वं, शस्त्राणां तीक्ष्णत्वं, पवनस्य शैघ्र्यं च स्त्रीषु सम्मिलि-तानीति मे मतिः । इयं तु शीलाभरणा भर्तृपरायणा दोषासङ्गरहिता रवेः प्रभेव भाति । ससीतासौमित्रिणा च भवता देशोऽयमलंकृतो विराजते'—इति ॥

तथा ब्रुवाणमगस्त्यं रामो 'गुरोरत्रभवतः परितोषेण धन्योऽस्मि' इति प्रतिनन्द्य 'निवासार्हं स्थानमादिश' इति प्रार्थयत । अगस्त्यस्य निदेशेन तौ रघुवरौ गोदावरीतीरवर्तिनीं नित्यपुष्पित-काननां पञ्चवटीं प्रति प्रतस्थाते ॥

पञ्चवटीं प्रस्थितो राघवः पथि महाकायं गृध्रं विलोक्य तं राक्षसं मन्यमानो* जिघांसुरभिदुद्राव। स तु मधुरया वाचा वत्सेत्यामन्त्र्य जगाद—'पितुः सखायं गृध्रराजं जटायुषं मामवेहि। दिष्ट्या सुहृदः सुतौ युवां दृष्ट्वा हृष्टोऽस्मि'—इति। रामलक्ष्मणौ तद्वार्ताश्रवणेनानुस्मृतजनकौ भक्त्या तमपूजयताम्। अप्रार्थित एव रामेण स पक्षिराजः प्रेमभरेण 'अत्र निवसतस्ते सहायो भविष्यामि, युवयोरसन्निधाने सीतां रक्षिष्यामि' इति च प्रतिश्रुत्याकृत्रिमां मैत्रीमाविश्चकार॥

ततो रामः पञ्चवटीं प्राप्य दीप्ततेजसं भ्रातरम् 'आश्रमोचितः सन्निकृष्टजलाशयः सुलभकुशपुष्पफलः प्रदेशः समीक्ष्य परिगृह्यताम्' इत्यादिदेश। स तु 'त्वयि स्थिते वर्षशतं कृतपरिचयोऽपि परवानयं न निर्णेतुमलम्' इत्युक्त्वोदासिष्ट। तदा रामः सुरुचिरं नातिदूरस्थया विकचपद्मया पद्मिन्या विराजमानं पुष्पितैः पादपैः परिशोभमानं कूजद्विहगसंकुलं कमपि प्रदेशं तस्मै दर्शयामास। तत्र भ्रातुरभिप्रायमनुरुध्यमानः सौमित्रिः संहतमृत्तिकां दीर्घैर्मस्करैः कृतवंशां शमीशाखाभिरास्तीर्य दृढपाशावपाशितां कुशकाशशरैः सुपरिच्छादितां समीकृततलां पर्णशालां निर्माय रामाय कृतमाश्रमपदं निवेदयामास। प्रसन्नहृदयो रामः सुमित्रासुतमभिनन्द्य सुखेन तामध्युवास। प्रसन्नमधुराः स्निग्धा वनस्थलीरवेक्षमाणः सह सीतया लक्ष्मणेन च विविधाः कथाः कथयंश्च दाशरथिस्तस्मिन्नाश्रमे क्षणमिव दिवसान्निनाय॥

अथैकदा राक्षसचक्रवर्तिनो लोककण्टकस्य रावणस्य भगिनी शूर्पणखा यदृच्छया तं प्रदेशमाजगाम। सा च वासन्तोपम

---

* Agent noun of the desiderative of हन् to kill.

इति । ततः सुतीक्ष्णोपदिष्टेन तथा पीतसागरस्य विन्ध्यदर्पदमनस्य वातापितापनस्य मुनेः परमपावनमाश्रमं शिश्रिये ॥

धर्मात्मानं रामं स्वाश्रमं प्रत्यागतं दृष्ट्वा चुलुकितसागरोऽपि स मुनिः प्रमोदसागरे ममज्ज । रामः सह सीतया लक्ष्मणेन च सूर्यवर्चसो महर्षेः पादौ जग्राह । कृताञ्जलिं रघुवरं कुशलं पृष्ट्वा पुष्पफल-मूलादिभिः सत्कृत्य महर्षिरानन्दभरितः प्रोवाच—'पुरुषव्याघ्र, विश्वकर्मणा निर्मितं हेमराजिभूषितं वैष्णवमिदं दिव्यं धनुः, अयं च ब्रह्मदत्तः सूर्यसङ्काशः शरोत्तमः, इमौ च माहेन्द्रौ निशितबाणपूर्णौ निषङ्गौ, अयं च हैमकोशो दिव्यखड्गः, सर्वमेतत् विजयाय मत्तो गृहाण' इति । एवमुक्त्वा सर्वाणि तानि दिव्यायुधानि राघवाय वितताार ॥

गृहीतास्त्रं रामचन्द्रमगस्त्यः पुनरपि बभाषे—'राम, सुकुमारी राजगृहोचिता जनकनन्दिनी भर्तृस्नेहप्रचोदिता त्वामनुसरन्ती प्राज्यदोषं वनं प्राप्ता । सैषा यथा न खिद्येत तथा त्वं कर्तुमर्हसि । प्रायेण स्त्रीणामियं प्रकृतिः, यत्समस्थमनुरज्यन्ते पतिं, विषमस्थं त्यजन्ति च । विद्युतां लोलत्वं, शस्त्राणां तीक्ष्णत्वं, पवनस्य शैघ्र्यं च स्त्रीषु सम्मिलि-तानीति मे मतिः । इयं तु शीलाभरणा भर्तृपरायणा दोषासङ्गरहिता रवेः प्रभेव भाति । ससीतासौमित्रिणा च भवता देशोऽयमलंकृतो विराजते'— इति ॥

तथा ब्रुवाणमगस्त्यं रामो 'गुरोरत्रभवतः परितोषेण धन्योऽस्मि' इति प्रतिनन्द्य 'निवासार्हं स्थानमादिश' इति प्रार्थयत । अगस्त्यस्य निदेशेन तौ रघुवरौ गोदावरीतीरवर्तिनीं नित्यपुष्पित-काननां पञ्चवटीं प्रति प्रतस्थाते ॥

पञ्चवटीं प्रस्थितो राघवः पथि महाकायं गृध्रं विलोक्य तं राक्षसं मन्यमानो* जिघांसुरभिदुद्राव। स तु मधुरया वाचा वत्सेत्यामन्त्र्य जगाद—'पितुः सखायं गृध्रराजं जटायुषं मामवेहि। दिष्ट्या सुहृदः सुतौ युवां दृष्ट्वा हृष्टोऽस्मि'—इति। रामलक्ष्मणौ तद्वार्ताश्रवणेनानुस्मृतजनकौ भक्त्या तमपूजयताम्। अप्रार्थित एव रामेण स पक्षिराजः प्रेमभरेण 'अत्र निवसतस्ते सहायो भविष्यामि, युवयोरसन्निधाने सीतां रक्षिष्यामि' इति च प्रतिश्रुत्याकृत्रिमां मैत्रीमाविश्चकार॥

ततो रामः पञ्चवटीं प्राप्य दीप्ततेजसं भ्रातरम् 'आश्रमोचितः सन्निकृष्टजलाशयः सुलभकुशपुष्पफलः प्रदेशः समीक्ष्य परिगृह्यताम्' इत्यादिदेश। स तु 'त्वयि स्थिते वर्षशतं कृतपरिचयोऽपि परवानयं न निर्णेतुमलम्' इत्युक्त्वोदासिष्ट। तदा रामः सुरुचिरं नातिदूरस्थया विकचपद्मया पद्मिन्या विराजमानं पुष्पितैः पादपैः परिशोभमानं कूजद्विहगसंकुलं कमपि प्रदेशं तस्मै दर्शयामास। तत्र भ्रातुरभिप्रायमनुरुध्यमानः सौमित्रिः संहतमृत्तिकां दीर्घैर्मस्करैः कृतवंशां शमीशाखाभिरास्तीर्य दृढपाशावपाशितां कुशकाशशरैः सुपरिच्छादितां समीकृततलां पर्णशालां निर्माय रामाय कृतमाश्रमपदं निवेदयामास। प्रसन्नहृदयो रामः सुमित्रासुतमभिनन्द्य सुखेन तामध्युवास। प्रसन्नमधुराः स्निग्धा वनस्थलीरवेक्षमाणः सह सीतया लक्ष्मणेन च विविधाः कथाः कथयंश्च दाशरथिस्तस्मिन्नाश्रमे क्षणमिव दिवसान्निनाय॥

अथैकदा राक्षसचक्रवर्तिनो लोककण्टकस्य रावणस्य भगिनी शूर्पणखा यदृच्छया तं प्रदेशमाजगाम। सा च वासवोपमं

---

* Agent noun of the desiderative of हन् to kill.

महाबाहुमभिरामं रामं दृष्ट्वा काममोहिता बभूव । दुर्मुखी विरूपाक्षी वामभाषिणी दुर्वृत्ता च सा राक्षसी सुमुखं राजीवलोचनं मधुरभाषिणं धर्मात्मानं राममुपगम्य तद्वार्तामवगम्यात्मचरितं व्याचक्षाणा 'चिरायभव भर्ता मे, सीतया किं करिष्यसि' इति निस्त्रपं निजगाद ॥

रामस्तां स्मितपूर्वं व्याजहार—'भवति, अहं कृतदारः, इयं च मे दयिता न त्यागमर्हति, त्वद्विधानां नारीणां दुःसहं खलु सापत्न्यदुःखम् । तदलं तवानया वाञ्छया । अकृतदारममुं ममानुजं लक्ष्मणं भर्तारं भजस्व'—इति । एवं रामेण गदिता राक्षसी सहसा तं विसृज्य लक्ष्मणमुपगम्य तथा प्रार्थयत । तेन च स्मयमानेन, 'अहमार्यस्य दासोऽस्मि, अनेन रूपेणान्विता त्वं कथं दासपत्नी भवितुमभिलषसि' इत्यभिहिता तं परिहासमजानती राममेव पुनः प्रपेदे । एवं गतागताभ्यां खिन्ना सा सीतां स्वमनोरथस्यान्तरायं मत्वा तन्निग्रहेच्छया तामभ्यद्रवत् । तदा कुपितो रामः 'इमामतिमतासतीं विरूपयितुमर्हसि' इति लक्ष्मणमादिदेश । सोऽपि तरसा करवालमुद्धृत्य रामसमक्षमेव तस्याः कर्णनासिकं चिच्छेद ॥

निकृत्तकर्णनासा निशाचरी घोरं निनदन्ती बहुशः पीतपूर्वं रुधिरमिव वमन्ती रक्तसिक्तसरणिर्द्रुततरं धावन्ती भ्रातरं खरमुपेत्य स्ववृत्तान्तं सर्वमभिदधे । स्वसुः परिभवेन दीप्तकोपः खरो रामलक्ष्मणयोर्निग्रहाय महाबलान् चतुर्दश राक्षसान् प्रजिघाय । उद्यतायुधान् शूर्पणखादर्शितेन पथा योद्धुमापततस्तानवलोक्य

* द्वन्द्व Compound consisting of words expressive of limbs of living beings is always in neuter gender and singular number.

रामः सौमित्रिं सीतायाः पालनाय नियुज्य चामीकरविभूषितं महद्धनु_राधाय संमुखीबभूव । ते चतुर्दशापि प्रत्येकं राघवं प्रति शूलनि चिक्षुपुः । रामोऽपि तावद्भिः सायकैः शूलानि शतधाकृत्य निशितैरपरैश्चतुर्दशभिः शरैस्तेषां प्राणान् जहार ॥

चतुर्दशसु तेषु निमेषमात्रेण रामबाणाग्निशलभतां प्राप्तेषु शूर्पणखा तापेन दह्यमाना पुनः खरमभिगम्य बहुधा तं गर्हयामास । 'धिक् ते शूरमानिनो विकत्थनस्य बाहुबलम्* यदि तौ मानुषौ हन्तुं न शक्नोषि तर्हि जनस्थानात्तूर्णमपयाहि । अन्यथा रामतेजसाऽभिभूतः क्षिप्रं विनङ्क्ष्यसि ' इत्यादिभिर्वाक्यैः खरक्रोधमुत्तेजयन्ती भृशदुःखिता सा कराभ्यामुदरं *हत्वा रुरोद ॥

तयैवं वाग्वज्रेण प्रहृतः खरः सहसा रणाय सन्नह्य नीलजीमूतवर्णानां रक्षसां चतुर्दशभिः सहस्रैरनुगम्यमानः सह दूषणत्रिशिरोभ्यां सेनापतिभ्यां राममभिययौ । सीतां लक्ष्मणे विन्यस्यामुक्तहेमकवचो मण्डलीकृतकार्मुको रणपण्डितो राघवो भीमविक्रमाणां रक्षसां चतुर्दश सहस्राणि स्वयमेक एव सहस्रशो विमुक्तैः शरैर्निहत्य खरं सदूषणत्रिशिरसं च यमनगरातिथिं वितेने । अद्भुतेन रामविक्रमेण विस्मिता देवाः कुसुमानि, महर्षयश्च स्वस्तिवाक्यानि राघवे ववृषुः । वैदेही च शत्रुहन्तारं महर्षीणां सुखावहं रणाजिरादावर्तमानं वल्लभं परिषस्वजे ॥

रामाभिभवेन दूयमानहृदयाऽमर्षविवशा च शूर्पणखा लङ्कां गत्वा राक्षससार्वभौमं रावणममात्यपरिवृतमभिगम्य परुषया

---

*कराभ्याम् उदारताडनं राक्षसीनां स्वभावः ।

गिरैवं व्याजहार—'प्रमत्तः स्वैरवृत्तो निरङ्कुशः समापतितं महद्भय-मबुध्वा किमेवं वर्तसे? भीमकर्मणां रक्षसां चतुर्दश सहस्राणि खरदूषणत्रिशिरसश्च पदातिना रामेणैकाकिना शरैः पञ्चतामनायिषत। दुर्धर्षेण राघवेण ऋषीणामभयं दत्तम्, दण्डकारण्ये च क्षेममापादितम्। तस्य धर्मपत्नीं राकाशशिनिभाननामनवद्याङ्गीं सीतां तव भार्यां चिकीर्षुरहं हठादानेतुमुद्यता। तस्योद्यमस्य फलमिदं तदनुजादधिगतं मदीयं वैरूप्यं किं न पश्यसि? सर्वमेतदवबुध्य यत्ते रोचते तत्कुरुष्व'—इति॥

रोमहर्षणं शूर्पणखायास्तर्जनं कर्णाभ्यां निपीय कोपाकुलो दशमुखः सत्वरमुत्थाय सचिवान् विसृज्य रथमारुह्य वियत्पथेन प्रातिष्ठत। समुद्रस्य परं पारमुपागतो दशकन्धरो रम्यं तपोवन-मधिवसन्तं रजनीचरं मारीचमुपेयाय। तेन यथार्हं सत्कृतः कुशलमागमनहेतुं च पृष्टो विनीत एवमावेदयामास—'मारीच, श्रूयतां मे वचनमवधानेन। अहमिदानीमार्तस्त्वां प्रपन्नोऽस्मि। जनस्थाननिवासिनः खरप्रमुखाश्चतुर्दशसहस्राधिका राक्षसाः कार्मु-कद्वितीयेन रामेण कालधर्मं प्रापिताः, भगिनी मे शूर्पणखा तदनुजेन लक्ष्मणेन विरूपिता च। तस्य प्रतिचिकीर्षुरहं जनस्थानात्तस्य भार्यां सीतां जिहीर्षामि। तत्र मे साहाय्यं कर्तुमर्हसि। भवता रजतबिन्दुचित्रितस्य हेममृगस्य रूपं धारयता सीतायाः प्रमुखे चरितव्यम्। अपूर्वमृगरूपं त्वां विलोक्य सा 'गृह्यतामयम्' इति भर्तारं लक्ष्मणं चाभिधास्यति। ततस्तयोरपाये शून्यं तदाश्रमं प्रविश्य निराबाधस्तां विधुन्तुद इव विधुसुषमां सुखेन हरिष्यामि'—इति॥

मारीचो वक्रं पन्थानमाश्रितस्य राक्षसपतेस्तमुद्योगमकुशलो-

दर्कमाकर्ण्य राघवाद्रावणाच्च सममेव चकितहृदयो बभाषे—'राजन्, सततं प्रियवादिनः पुरुषा लोकेऽत्र सुलभा एव। अप्रियस्यापि पथ्यस्य वक्तारः श्रोतारश्च कामं विरलाः। तदग्रतो विषतुल्यमपि परिणामेऽमृतोपमं मद्वाक्यं मा तिरस्कार्षीः। रामस्य सुमहद्वीर्यमविदित्वा त्वमेवं मन्यसे। अयमस्मि रामपराक्रमस्य साक्षी। स हि संक्रुद्धो लोकानराक्षसान् विदध्यात्। यदि मया निवार्यमाणोऽपि प्रसह्य सीतां हरिष्यसि तर्हि सबान्धवो यमक्षयं गमिष्यसि'—इति। एवं वदन् विश्वामित्रयज्ञे दण्डकारण्ये चात्मनाऽनुभूतमातङ्कं वर्णयामास॥

कालचोदितो राक्षसचक्रवर्ती मारीचोपदेशं न प्रतिजग्राह। 'यदि मदाज्ञां न करोषि तर्हि त्वामहमद्यैव हन्यामिति जानीहि, न हि राज्ञः प्रतिकूलवर्ती सुखं लब्धुमर्हति' इति स मारीचमुवाच। स्वामिप्रीतये रामबाणैः प्राणहानिर्वरमिति मन्यमानो मारीचो विमानमारुह्य रावणमनुससार॥

रामाश्रमं प्रविष्टमात्रः कामरूपी मारीचः क्षणेन नानारत्नविचित्रितः परमशोभनो हेमहरिणः संजज्ञे। आश्रमपरिसरे कुसुमान्यपचिन्वती जानकी तमाश्चर्यरूपं हरिणं संप्रेक्ष्य रामं लक्ष्मणं चामन्त्र्य 'मनोहरोऽयं हरिणः क्रीडार्थमानीयताम्' इत्यसकृदभ्यर्थयामास। 'समाप्तवनवासैरस्माभिरयोध्यां नीतश्चेदन्तःपुरालङ्कारोऽयं भविष्यति। यदि सजीवो न गृह्यते तदाऽपि निहतस्यास्य सुरुचिरं चर्म नः कोमलं रमणीयमास्तरणं भविष्यति' इत्यादि कौतुकावेशेन कथयन्त्या सीतया प्रचोदितः स्वर्णमृगस्य च रूपेण प्रलोभितो रामस्तं ग्रहीतुमियेष। 'सौमित्रे हरिणमानेतुं

